वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका


संपुटः १५ | FEBRUARY 1977 | क्रमांकः २









नव्हं माघाङ्कः | शकाब्दाः १८९८ | मूल्यम् ०·५० पैसाः

# विषयसूचिका







श्रीमहालक्ष्म्यै नमः



# लक्ष्मीस्तोत्रम्

कुमारी डि. इन्दिरा, व्याकरणशिरोमणिः' शिक्षाशास्त्री, तिरुपति।

श्रियं देवीं महालक्ष्मीं विष्णुवक्षोविहारिणीम् ।
पद्मां वेङ्कटनाथस्य महिषीं नौमि सन्ततम् ।।

रमेति पद्मेति हरिप्रियेति वैकुण्ठवासेति दयापरेति ।
क्षीराब्धिपुत्रीति च ये जपन्ति ते विष्णुसायुज्यमवाप्नुवन्ति।।

पद्मालये पद्मदलायताक्षि पद्मानने पद्मकरे सुशोभे ।
त्वत्पादपद्मं प्रणमामि नित्यं कृपाकटाक्षं मयि संविधेहि ।।

सुवर्णमुखरीतीरे शुकब्रह्मर्षिपत्तने ।
विहरन्तीं श्रियं वन्दे वेङ्कटेशस्य वल्लभाम् ।।

मुक्ताविद्रुममाणिक्यस्वर्णाभरणमण्डिताम् ।
पद्मां पद्मसरोजातां वन्दे नारायणप्रियाम् ।।



# भारते सार्वत्रिक निर्वाचनम्

राष्ट्रीय - जनजीवने सार्वत्रिक - निर्वाचन मत्यन्तमावश्यकं भवति। लोकतन्त्रात्मके गण - राज्यात्मके च अस्मदीय - भारतानुशासने काले काले शासन - सत्तायाः पुनर्नवीकरण मेष्टव्यमेव। प्रभुशक्तिः, मन्त्रशक्तिः, उत्साहशक्ति रिति शक्तित्रयस्य ह्रासः राष्ट्रीयानुशासने कदाऽपि माभूदिति कृत्वा नेतारः सार्वत्रिकनिर्वाचनाय प्रयतेरन्नित्यस्ति व्यवस्था।

ऊनान्यूनं सार्धसंवत्सरं प्रवर्तमानायां आत्ययिकदशायां सार्वत्रिकनिर्वाचनं मार्च् (फाल्गुन) मासे भविष्यतीति भारत-प्रधानमन्त्रिवर्यया यदुद्घोषितं; तन्नूनं पक्षप्रतिपक्षाणां, समेषामेव नेतॄणां चैतन्योज्जीवनमिव। अस्या मवस्थायां लोकसभायाः पुनर्निर्वाचनं नाम राष्ट्रीयजनजीवने उत्साह - शक्तिप्रसारणमेव भवति।

"लोकास्समस्ता स्सुखिनो भवन्तु, इत्यसौ चे दादर्शः अस्मदीयभारतीय - मन्त्रशक्तेः, तर्हि तदनुरूपा तदनुकूला च प्रभुशक्तिः काले कले व्यवस्थापनीया भवति। तत्पूर्वाङ्गतया लोकानां - देशीयजनानां उत्साहः प्रवर्धनीयः प्रवर्तनीयश्च।

प्रभाते दुग्धं क्षीरमेव उष्णीकृतं सत् आसायं पयसार्हं भवति। पायसमिति इदानीन्तनीं दृष्टिं स्वीकृत्य काफी - चाय प्रभृतिकं पानीयजातं पायसमेव भवितु मर्हति खलु। प्रशस्तं पायसं यदि वय मभिलषामः, तर्हि प्रशस्तमेव क्षीरमपेक्षितं भवति।

लोका स्समस्ता यदि गावो भवन्ति, तर्हि नेतारः भविष्यत्सुख - सुविधादिरूपं वत्सं पुरस्कृत्य दोग्धारो भवेयुः। दोहनं तु सार्वत्रिकं निर्वाचनम्। दुग्धं पुनः अमृतकलशस्थानीयं प्रभुत्वम्। पक्ष प्रतिपक्षाभ्यां निर्मथिते लोकसागरे सर्वप्रथमतः हालाहलो मा भूदिति प्रार्थनीय मस्ति। जगन्मोहिन्याः अवतारः, अमृतकलशस्वायत्तीकरणं, प्रतिपक्ष - विक्षेप - पूर्वकं स्वपक्ष - दक्षताप्रकटनं चेत्यादिक मन्ते भविष्यति।

उष्णीकृतं पयः उत्सिक्तं भवति। पात्रादुत्सिक्तं पयः बहिर्गतं सत् चुल्लीसात्कृतं भवेत्। अतः दुग्धोष्णीकरणे अप्रमत्तै र्भाव्यम्। एव मेव लोका स्सोत्साहा भूयासुरिति बुद्धया प्रवर्त्यमाने निर्वाचन कार्यक्रमे निर्वाच्यमानानां पक्ष - प्रतिपक्षीयाणां अभ्यर्थिनां कृते आदराभिमानै स्सह लोकाः स्वस्वमतानुदानं कुर्युरेव। परन्तु, दुराग्रह - दुरभिमान - प्रदर्शनपूर्वकं कल्लोल - हालाहलं नैव जनयेयुरिति आशास्यते। पात्रा दुत्सिक्तं पय इव लोकोत्साहशक्तिः मागा दधोगतिम्।

पक्ष - प्रतिपक्षीयाभ्यर्थिनोऽप्यस्मिन् निर्वाचन कार्यक्रमावसरे शिष्टाचारं (पार्लमेण्टरी - विधानं) अनुसरेयुश्चेत् राष्ट्रीय मान्यतायाः परिपोषका भवेयुः। प्रतिपक्ष - विक्षेपणं स्वपक्ष - निक्षेपणं चेत्युभयं अपृथक्सिद्धम्। तथाऽपि रजोदूषितमार्गं विहाय सत्त्वोपयुक्तविधानं स्वीकुर्युश्चेत्, स्वयं शिष्टा एव भवेयुः, अनुचराश्च दुष्टा न भवेयुः, लोकाश्च सर्वे पार्लमेण्टरी - विधाने अनुशिष्टाश्च भवेयुः।

"लोकानां - लोकैः - लोकेभ्यः" इति समुद्दिष्टं अनुशासनं प्राप्तकाल मिदानीम्। अतः भारतीय जनानां मनांसि अधि-

नायकं सुस्थिरंप्रभुत्वं स्थापयितुं समीहन्ताम्। लोकै समस्तैरपि स्वाधिकारादप्रमत्तै र्भाव्यम्। स्वाभिमतं पक्षं बहुमतपुरस्कृतं कर्तुं जनैः सर्वैं र्बद्धादरै र्भाव्यम्। दीर्घकालिके स्वकीयानुशासने स्वीयां शक्ति युक्ति च पात्रगतां कुर्युश्चेत्, लोकाः समस्ताः सुखिनो भवेयुः।

भारते सार्वत्रिकं निर्वाचनं सम्पद्यताम्। पक्ष - प्रतिपक्ष नेतारः परस्परं सम्भावयन्तु। लोकाश्च सर्वे स्वीयसभा - पुनर्निमाणे सोत्साहाः सयुक्ति - सशक्ति प्रवर्तन्ताम्। जयतु भारतम्! जयतु भारती सन्ततिः!! जयतु भारतीया संस्कृतिः!!!



रूप्यकप्रभावः —

नाहारो न जलं न दीपविततिः नो वा गृहं त्वां विना,
समान्यस्य च दीवनं कटुतरं लोके भवेत्त्वां विना।
बालो वा स्थविरोऽथवा च पुरुषो वा स्त्री त्वया तुष्यति,
भो भो रूप्यक ते प्रभावमधिकं वक्तुं समर्थोस्ति कः॥

प्रीत्या पश्यत्वियं भवानविरतं तं पुण्यपूर्णं जनम्,
दृष्ट्वा तृप्यति तस्य मित्रनिवहः भार्या गृहे नन्दति।
हृष्टास्तस्य तनूभवश्च जनता संभावत्येव तम्,
भो भो रूप्यक ते प्रभावमधिकं वक्तुं समर्थोऽस्ति कः?

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम्।

# शुचीन्द्रस्थलमाहात्म्यम्

श्री पि. परमेश्वरशर्मा

इत्थमजेश हरिष्वथ बाले –
ष्वत्रि - गृहे ससुखं निवसत्सु ।
नारद एत्य सतीं कइहैते,
प्राह विदेश गतेत्विति कान्ते ॥ १

सा तमुवाच मुनिं तु कृतार्घ्यं,
वेत्सि मुनींद्र विधान ममीषाम् ।
नाह मवैमि कृतिं त्वदसीयां,
इत्युपवर्ण्य गिरं स तिरोऽभूत् ॥ २

स। द्रुतमेत्य तमाश्रममारात्,
यत्र वसंति तपस्थित देव्यः ।
तास्समुवाच विधिं सुमुखीनां,
भर्तृसमागम कृन्नियमस्य ॥ ३

आदिशिवो हि जगद्भवकाले,
स्वप्रकृतौ प्रतिबिम्बित आसीत् ।
अद्भुतमूर्तिरथाऽजनयत्सा,
त्रीणि शिवा कनकाण्डवराणि ॥ ४

इन्दिरया सह पङ्कजजन्मा,
चन्द्रकिशोरधर स्सह वाण्या ।

अम्बिकया सम मम्बुजनेत्रोऽप्य
    ण्डचया त्सम माविरभूवन् ॥ ५

सृष्टिकृतौ हि विधिं सह वाण्या,
    चक्रिण मिन्दिरया स्थितिहेतो ।
संहृति कर्मणि शंभुमुमाढ्यं,
    सादिमशक्तिरयोजयदेवम् ॥ ६

तामिह पूजयतादिमशक्तिं,
    सर्वजगद्भवकारणमार्द्राम् ।
कार्मुक नाम निवासि वरार्द्रा,
    भेतु भवेध्रुवमीप्सितलाभः ॥ ७

इत्यमृषी व्रतकल्पमुदीर्य,
    स्वर्भुवनं च तत स्स जगाम ।
इन्द्रसदस्यृषि मंत्रि मवेक्ष्या –
    शंसदुदन्तमिमं च विचित्रम् ॥ ८

नारदवर्णित मद्रिसुताद्या –
    स्तास्तु निशम्य मुदा सह सम्यक् ।
चक्रुरुदीर्णहृदन्तरभावा,
    सद्व्रतमेतदथादिमशक्तेः ॥ ९

यत्र सुधाब्धिसुता विधिकान्ता,
    चक्रुरुमा च सुतीव्र तपस्याम् ।
यज्ञसरोवर तीरगताऽत्र
    क्षिप्रमिमान् परिपाहि विपद्भ्यः ॥ १०

# मनोबोधः

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

रथ्यासु माऽट किल मानससारमेय,
शीघ्रं प्रयाहि भगवन्निलयाग्रदेशम् ।
प्राप्नोषि मन्दिरमुखे भगवत्प्रसादं,
वाञ्छानुकूलमतितुष्टिकरं हितञ्च ॥ १

संसारवृक्षमधिरुह्य कटूनि भुक्त्वा,
व्यर्थं हि मानसकपे तुदसि प्रकामम् ।
श्रीरामनाममधुराणि फलानि सन्ति,
प्रेम्णा वनोकसजनैः परिसेवितानि ॥ २

नित्यं गवां प्रणयने सुतरां प्रवृत्तः,
चिन्ताऽऽत्मनो न हि पुनश्च मनः ककुद्मन् ।
दुःखं मुहुर्भवति तेऽशिववर्तनेन,
तस्मादये पशुपतेर्निकटं प्रयाहि ॥ ३

संसारघोरविपिने निजबर्हजालम्,
विस्तार्य मानसमयूर कृतो हि नृत्यम् ।
कस्यापि तेन न च तुष्टिरहो विमूढ,
शीघ्रं समाश्रय शिवात्मज मात्मदेवम् ॥ ४

सन्तानपालनकृते मृगयन्नथ त्वम्,
विद्वेषिणो बलिभुजस्सदनं प्रयासि ।
तं मुञ्च पक्षिपपते शरणं भजस्व,
तूर्णं मनःपरभृदाशु विचारशून्य ॥ ५

मोघोहि मानसमधुव्रत! ते प्रयत्नः,
संसारघोरविपिने मधुसंग्रहार्थम् ।
शीघ्रं प्रयाहि रघुरामपदारविन्दे,
सीताकराम्बुरुहयुग्मसदाश्रिते च ॥ ६

बद्धश्च मानसशुकेह सुभुक्तिमुक्ती,
संसारपञ्जरगतो यदि वांछसि त्वम् ।
श्रीरामरामरघुराम सुनामपंक्तिम्,
उच्चैरुदीरय मुहुर्भवबन्धहन्त्रीम् । ७

व्यर्थं भवद्भ्रमण मत्र मनश्चकोर,
संसारघोरविपिने भवदावतप्ते ।
आराममोहितमये रघुरामचन्द्र –
ज्योत्स्ना - सुरञ्जितमये भज ते सुखाय । ८



# कालिदासकवेः तात्त्विकी प्रतिभा

खंडविल्लि सूर्यनारायणशास्त्री, मुङ्गान्दा।

महाकवीनां उत्तमकाव्यकुसुममञ्जर्यः लौकिकविज्ञानेन साकं अलौकिकज्ञानसौरभेण सुतरां सुरभिता भवन्ति। काव्यगत मेतत्सौरभं च श्लोकसुमेभ्यः व्यंग्यरीत्या उद्गच्छति। एतत् व्यंग्यवैभवमेव काव्यजीवितमिति आलंकारिकसमयः।

प्रस्तुते कालिदासकाव्येभ्यः व्यंग्यमर्यादया प्रादुर्भूतां कवेस्तात्त्विकीं प्रतिभां लेखेऽत्रसंग्रहेण संदर्शयितुकामः। यथा —

चन्द्रं गता पद्मगुणा न्न भुङ्क्ते,
पद्माश्रिता चान्द्रमसी मभिख्याम्।
उमामुखंतु प्रतिपद्य लोला,
द्विसंश्रयां प्रीति मवाप लक्ष्मीः॥

पार्वतीमुखवर्णनाऽवसरे कविकुलगुरोः वर्णनमेतत्। अत्र उमामुखाऽश्रयणाऽनन्तरं शोभालक्ष्म्याः द्विसंश्रयप्रीत्यनुभवलाभरूपो मुख्योऽर्थः प्रसिद्ध एव। व्यंग्यरीत्या श्लोकेऽत्र द्वितीयपादे अर्थान्तरः श्रूयते। शृणुत।

लक्ष्मीः = संस्कृतकवितालक्ष्मीः; उमामुखं प्रतिपद्य = उमामुखमिव भव्योदात्त भावप्रकाशरूपशोभया भासमानं कालिदासकाव्यचयं प्राप्य, द्विसंश्रयां प्रीतिं = ऐहिकमामुष्मिकं चेत्युभयविधविषयगतां प्रीतिं अवाप। अत्र कालिदासकाव्याऽऽश्रयणात् प्राक् इतरकविकाव्येषु, द्विसंश्रय प्रीत्यनुभवलाभराहित्येन कारणेन

शोभालक्ष्म्याः "तादृशी प्रीतिः कुत्र लभ्यत" इति विचिन्वन्त्याः लोलत्वं युज्यत एव। अत्रत्येन अनेन वर्णनेन एवं ज्ञायते यत्, भगवत्याः भागीरथ्याः पवित्रप्रविमलप्रवाहैस्साकं इतर नदीप्रवाहा मिलित्वा यथा प्रवहन्ति तद्वत्, कालिदासकवेः कमनीय महनीय कविताव्राहिन्यां ऐहिकं स्साकं आध्यात्मिकविषयप्रवाहाः पाठकयात्रिकान् पावयन्तस्सन्तः प्रवहन्तीति प्रत्यभिज्ञायते। एतदनुरूपमेव लौकिकव्यवहार प्रवणानामिव पारमार्थिकविषयसंलग्नधियामपि संसेव्या भवति कालिदासकवितलक्ष्मीरिति वक्ष्यमाण श्लोकेन सूच्यते। कौत्समहर्षि प्रति रघुमहाराजस्य वचनमेतत्।

गुर्वर्थ मर्थी श्रुतपारदृश्वा,
रघोस्सकाशा दनवाप्य कामम्।
गतो वदान्यान्तर मित्ययं मे,
माभूत्परीवादनवावतारः॥ (रघुवंशे काव्ये)

गुरुदक्षिणा सम्पादनाय शास्त्रपारङ्गतः कश्चिद्याचकः रघोरन्तिकमागत्य तस्माद्राज्ञ. अनवाप्तमनोरथस्सन् (स याचकः) दात्रन्तरं गत इति नूतनपरीवादः मम (रघोः) माऽस्तु।" इत्येवं रूपो वाच्यार्थः प्रसिद्ध एव। किंचाऽत्र वरिष्ठो व्यंग्यार्थः श्रूयते। यथा —

श्रुतस्य वेदस्य पारं पश्यतीति – श्रुतपारदृश्वा = वेदपारङ्गतः "श्रुतं मे गोपाय" इति श्रुतेः। एवं अर्थी = वेदांतविज्ञानार्थी, गुरुश्च असौ अर्थः-गुर्वर्थः = मोक्षपुरुषार्थः, तं गुर्वर्थं कांक्षन् रघोः रघुवंशनाम्नः काव्यात् (सकाशात्); कामं = स्वाभिलषितं मोक्षज्ञानप्राप्तिरूपं अप्राप्य, वदान्यान्तरं = तादृशज्ञानप्रदातारं ग्रन्थान्तरं (अर्थी) गत इति, मे = कालिदासस्य मम, परीवादन-

बावतारः माभूऽत् इति व्यंग्यार्थः । अर्थात् अत्र काव्ये तत्तत्सन्दर्भेषु कविना वेदान्तज्ञान संबन्धिनः विषया अपि सुनिपुणं विनिवेशिता इति यावत् । अत्र "रघोः" इति पदस्य उपलक्षणत्वात् कालिदासीय काव्येष्विति लभ्यते । एतावता एवं ज्ञायते यत्, कौत्सनामकश्शिष्यः वरतंतुगुरो स्सकाशात् अधिगतलौकिक पारलौकिकविद्यस्सन् यथा कृतकृत्योऽभूत्, उत्तमाधिकारी पाठकोऽपि तथा कवेरस्य काव्येभ्यः धर्मार्थकामैस्साकं मोक्षशास्त्रविषयानपि अधिगन्तुं पारयति । कविः विशिष्टार्थमेनं विवरितुकाम इव अनन्तरश्लोके एवं कथयति ।

स त्वं प्रशस्ते महिते मदीये,
वसन् चतुर्थोऽग्निरिवाऽग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्,
यावद्यते साधयितुं त्वदर्थम् ॥

अत्र कौत्साभिलषितगुरुदक्षिणाप्रदानाय रघोः वाग्दानरूपेण वाच्यार्थेन साकं, व्यंग्यर्थोप्येवं प्रतिभाति । अस्मिन् अर्थे कविः पाठकोत्तममुद्दिश्य एवं प्रबोधयतीति मन्तव्यम् । यथा —

अर्थात्, तत्वविषयाववोधाय अर्हन् पाठक! महिते मदीये अग्न्यगारे = कालिदासीयकाव्यत्रयरूपे त्रेताग्निगृहे (कवेरस्य काव्यानि श्रव्याणि च त्रिसंख्याकान्येव) पाठकोत्तम! भवान् चतुर्थोऽग्निरिव वसन्, विप्रस्य अग्नितुल्यत्वं "शुचिर्विप्रः शुचिः कविः" इति वेदवाक्येन प्रथितमेव । द्वित्राण्यहानि = कंचित्कालं, सोढुमर्हति चेत् = सहनशीलेन तत्काव्यपरिशीलनं कर्तुमर्हसि यदि, त्वदर्थं=मोक्षापुरुषार्थप्राप्तिरूपं त्वत् प्रयोजनं साधयितुं, यावद्यते =

यतिष्ये। अर्थात्, तात्विक विषयविमर्शशाली पाठकोत्तमः एतत्कविकाव्येषु लौकिकार्थमिव पारलौकिकमप्यर्थं प्राप्तुं प्रभवतीति सारांशः। एवं उत्तरत्रापि कवेरस्य काव्यकुसुमगुच्छेभ्यः तत्वज्ञानशालिनः, बहुविधान् व्यंग्यार्थपरिमलान् उपलभेरन् इति ज्ञायते। एवमेव, कुमारसंभवे —

"कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः।"
"वेदान्तेषु यमाहु रेकपुरुषं व्याप्य स्थितं रोदसी॥"

(विक्रमोर्वशीयम्)

"बहुधाऽप्यागमैर्भिन्नाः पंथानस्सिद्धिहेतवः" (रघु)
"प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतुवः ताभिरष्टाभिरीशः"

(शाकुन्तलम्)

एवमाद्याः कालिदासीया स्सूक्तयः कवेरस्य तात्विक विज्ञानवैभवं विशदन्त्येव।

एतादृशस्य तत्वज्ञानस्य अवबोधाय प्रथमतः मानवेन अहङ्कारस्त्याज्यः। अहङ्काराऽभावश्च पापभावनिरासेन प्रादुर्भवति। पापप्रणाशश्च पश्चात्तापमन्तरा न संभवति। तादृशपश्चात्तापः चित्तशुद्धिसम्पादनेन प्रभवति। इत्येवं विधः कारणपरम्परा-प्रविष्टो मोक्षमार्गः कवेरस्य शाकुन्तलकथाभागैः व्यंग्यार्थ मुखेन अत्र संग्रहेण प्रकाश्यते। शाकुन्तलनाटके दुष्यन्तमहाराजस्य मृगव्यमृगाऽनुधावनेन कथाया आरंभः। अत्र च इमे विशिष्ट-विषयाः उपादेया वर्तन्ते, यैः व्यंग्यार्थसौरभमुदेति। त एते।

[अनुवर्तते]





# श्री श्रीनिवासाष्टकम्

"साहित्यविद्याप्रवीणः"
दीवि श्रीनिवासदीक्षितः, P. O. L. गुण्टूरु ।

पद्मापयोधराश्लेषभरालसशुचिस्मितः ।
श्रीनिवासः सप्तगिरिनिवासी मां सर्वदाऽवतु ॥ १

मृतोऽहं पुनरुद्भूतः जन्मन्यस्मिन्यनेकशः ।
अहो! चित्रा भवल्लीला मां तारय दयानिधे ॥ २

प्रभो! समायान्ति भवत्समीपं,
सर्वे पुनर्यान्ति समर्प्य केशान् ।
परन्तु लग्नः भवतः पदाब्जे,
नायाति चित्रं! मम चित्तभृङ्गः ॥ ३

श्रियाध्यासितोरःस्थलाभं सुरेशं,
प्रपन्नार्तसंरक्षकानन्दरूपम् ।

जगद्व्यापकं विश्वरूपं मुरारिं,
        स्मरामि स्मरामि प्रभुं श्रीनिवासम् ॥ ४

सदा राक्षसारिं सदा भक्तसेव्यं,
        सदा मोहचोरं सदा नीलदेहम् ।
सदा भूषिताङ्गं सदा पापनाशं,
        स्मरामि स्मरामि प्रभुं श्रीनिवासम् ॥ ५

नमस्ते नमस्ते जगन्मोहमूर्ते,
        नमस्ते नमस्ते वृषाद्रीश! शक्त ।
नमस्ते नमस्ते हरे! चक्रपाणे,
        नमस्ते नमस्ते विभो! वेङ्कटेश ॥ ६

सदा भक्तपाल! त्रयीवेद्यभाव!
        चिदानन्दरूप! प्रफुल्लाननाब्ज!
कृपालो! गुणागार! संसारपार!
        प्रसीद! प्रसीद! प्रभो! श्रीनिवास ॥ ७

प्रसीद प्रसीद प्रभापूरिताङ्ग,
        प्रसीद प्रसीद प्रभिन्नारिजाल ।
प्रसीद प्रसीद प्रपन्नानुकम्पिन्,
        प्रसीद प्रसीद प्रभो श्रीनिवास ॥ ८



# सम्पादकस्य विज्ञप्तिः



सहृदयलेखकानां सविधे गैर्वाणी सम्पादकवर्गस्य सविनय-मियं विज्ञप्तिः —

१. दीर्घरचना प्रेषणं नैव कर्तव्यम्। द्वित्रपुटपरिमित विषय-प्रेषणे गैर्वाण्यां प्रकाशनं सुलभतरं भवेत्।

२. स्वीयरचना-पुनःप्रेषणं यद्यभिलष्यते, तर्हि पोस्टल्चीटिकाः यावदपेक्षं प्रेषणीयाः।

३. रचनानां पुनरवलोकनानन्तरं सम्पादकवर्गानुमता एव ताः गैर्वाण्यां प्रकाश्येरन्। अतः पुनः पुन स्तद्विषये पत्रलेखने कृतेऽपि पत्रव्यवहारः न करिष्यते।

४. अनुवर्तमानविधया प्रकाश मपेक्षमाणानां सुदीर्घरचनानां कृते प्रथमत एव पत्र-व्यवहारः कर्तव्यः। स्वीकृतरचना एव तादृशा अनुवर्तेरन्।

५. हस्त लिखित रचनाभि र्यथापठनसौकर्यं असंश्लिष्ट वर्णानु-क्रमं च विशदतमाभि र्भाव्यम्।

लेखकाः पत्रिकानिर्वहणे विद्यमानं क्लेशजात मवगत्य सहकुर्युरिति सविनयं प्रार्थ्यते।

इति,

**सम्पादकः**

## मुख्यसूचनाः

**पिङ्गलदक्षिणायनपरीक्षातः—**

१. आवेदनपत्रमूल्यं रू. 0–05 स्यात् ।

२. पिंगलसंवत्सर - दक्षिणायनपरीक्षा प्रभृति (१९७७ सेप्टम्बर्) परीक्षार्थिनां अङ्कप्रदर्शिनी केन्द्रेभ्यः न प्रेष्येत । विशेषरूपेण स्वप्राप्ताङ्कान् जिज्ञासुना परीक्षार्थिना (रू. १–००) रूप्यकैकेन साकं प्रार्थनापत्रे प्रेषिते अङ्काः सूच्येरन् ।

३. उत्तरपत्राणां पुनःपरिशोधनाय परीक्षाफलितप्रकाशनानन्तरं मासत्रयाभ्यन्तरे प्रतिपत्रं (रू. 5–00) रूप्यपञ्चकं प्रेषणीयम्।

४. पिंगलवत्सर - दक्षिणायनपरीक्षातः समर्थपरीक्षा (खण्डद्वयात्मकतां विना) खण्डचतुष्टयात्मिका भवेत् । प्रतिखण्ड एकैकमेव प्रश्नपत्रं भवेत् । अभ्यर्थिनः यथासौकर्यं पूर्णतया खण्डशो वा परीक्षां दातुं शक्नुवन्ति । प्रथमपर्याये खण्डशः पूर्णतया वा परीक्षादाने (रू. ८–००) अष्टरूप्यकं शुल्कं भवति। पश्चात् प्रतिखण्डं (रू. ३–००) रूप्यकत्रयं शुल्कम् ।



# खाण्डिक्य केशिध्वजयोः कथा

— "संस्कृत कोविदः" मेडिशेट्टि शिवगणेश्बाबु,
पेद्दापुरम् ।

बभूव पुरा राजा धर्मध्वजः इति । द्वौ पुत्रौ अमितध्वज-कृतध्वजौ तस्य बभूवतुः । प्रख्यातः नृप एव केशिध्वजः पुत्रः कृतध्वजस्य । योऽभवत् कृती कर्ममार्गेण पृथिव्यां सः खाण्डिक्यः सुतः अमितध्वजस्य । अभवत् केशिध्वजोऽपि आत्मविद्या-विशारदः । आस्तां विजिगीषू परस्परं उभावपि तौ । स्वराज्या-दवरोपितः खाण्डिक्यः केशिध्वजेन ।

समवेतः पुरोधसा मन्त्रिभिः अल्पसाधनः खाण्डिक्यः राज्या-न्निराकृतः अभवच्च दुर्गारण्यचरः । इयाज सोऽपि केशिध्वजः सुबहून् यज्ञान् ज्ञानव्यपाश्रयः, ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्यु-मविद्यया । एकदा यागे वर्तमानस्य जघान धर्मधेनुं वने विजने उग्रश्शार्दूलः । तत्र राजा श्रुत्वा धेनुं व्याघ्रेण हतां पप्रच्छ चर्त्विजः प्रायश्चित्तं सः केशिध्वजः 'किं विधीयताम्' इति । ऊचुः तेऽपि 'न वयं विद्मः । पृच्छ्यतां कशेरुः' इति । तेनोक्तः तथैव प्राह भार्गवं कशेरुरपि । नाहं वेद्मि, पृच्छ शुनकं स वेत्स्यति' इति । स गत्वा अपृच्छत् तं । सोऽपि जगाद न कशेरुः, न चैवाहं न चान्यः, भुवि सांप्रतं वेत्त्येक एव त्वया जितः यः त्वच्छत्रुः खाण्डिक्यः' इति ।

केशिध्वजश्चाह 'मुने! तं व्रजाम्येष प्रष्टुमात्मारिपुं प्राप्त महायज्ञो यदि मां स हनिष्यति । प्रायश्चित्तमशेषेण स

चेत्पृष्टो वदिष्यति, ततश्चाविकलो यागो मे भविष्यति' इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो राजा वनं जगाम यत्रास्ते महामतिः स खाण्डिक्यः। प्रोवाच तमापतन्तमालोक्य रिपुमात्मनः, समारोपितकार्मुकः क्रोधताम्राक्षः — "हनिष्यसि त्वं कृष्णाजिनं कवचमाबध्यास्मान्? वेत्सि 'न प्रहरिष्यति मयि कृष्णाजिनधरे, इति? मूढ! न किं कृष्णाजिनं, वद मृगाणाम्? येषां चोग्राः त्वया मया प्रहिताः शितसायकाः। न मे जीवन्विमोक्ष्यसे हनिष्यामि स त्वामहम्। रिपुर्मम आततायग्यसि राज्यहरः" इति। केशिध्वजश्चाभणत् — "खाण्डिक्य! प्रष्टुं संशयं आगतोऽहं भवन्तम्। न त्वां हन्तुं, विचर्यैतत्बाणं कोपं च विमुञ्ज" इति।

ततः सः खाण्डिक्यः एकान्ते सपुरोहितः मन्त्रिभिः सार्द्धं सर्वैरेव मन्त्रयामास। तमूचुः 'वध्यो रिपु रेव वशं गतः। हतेऽस्मिन् भविष्यति तव वश्या सर्वा पृथिवी' इति मन्त्रिणः। खाण्डिक्यः अब्रवीत् तान्सर्वान्। एवमेतन्न संशयः, हतेऽस्मिन् पृथिवी मम भविष्यति सर्वाऽवश्यम्। परलोकजयस्तस्य, पृथिवी सकला मम। न हन्म चेल्लोकजयो मम, वसुन्धरा तस्य। नाऽहं मन्ये स्या द्वसुन्धरा लोकजयादधिका। परलोकजयोऽनन्तः, स्वल्पकालो महीजयः। तस्मान्नैनं हनिष्यामि वदामि तत् यत्पृच्छति" इति।

ततः तमभ्युपेत्याह रिपुं; खाण्डिक्य 'प्रष्टव्यं यत्त्वया सर्वं तत्पृच्छस्व वदाम्यहं' इति। ततसर्वं यथावृत्तं धर्मधेनुवधं कथयित्वा स केशिध्वजः पप्रच्छ प्रायश्चित्तं हि तद्गतम्। स चाचष्ट यथान्यायं केशिध्वजाय प्रायश्चित्तमशेषेण यद्वै तत्र

विधीयते। विदितार्थस्य तेनैव अनुज्ञातः महात्मनः यागभूमिमुपगम्य चक्रे सर्वाः क्रियाः क्रमात्।

क्रमेण विधिवद्यागं नीत्वा सोऽवभृथाप्लुतः, कृतकृत्यः भूत्वा चिन्तयामास पार्थिवः — "पूजिताश्च द्विजास्सर्वे सदस्या मानिता मया, तथैवार्थिजनोऽपि अर्थैः योजितोऽभिमतैः मया। यथार्हमस्य लोकस्य मया विचेष्टितं सर्वं, अनिष्पन्नक्रियं चेतस्तथापि मम किं यथा।" इत्थं सञ्चिन्तयन्नेव सस्मार स महीपतिः 'खाण्डिक्याय न दत्ता मया गुरुदक्षिणा इति। स जगाम तदा भूयो रथमारुह्य पार्थिवः दुर्गगहनं, खाण्डिक्यो यत्र संस्थितः। खाण्डिक्योऽपि पुनर्दृष्ट्वा तमायान्तं धृतायुधं तस्थौ हन्तुं कृतमतिः तमाह, स पुनर्नृपः — "खाण्डिक्य। नाहं तेऽपराधाय प्राप्तः, मा क्रुधः। गुरोर्निष्क्रयदानाय मामेव हि त्वामागतं जानीहि। निष्पादितो मया यागः सम्यक्त्वदुपदेशतः, सोऽहं ते दातुमिच्छामि गुरुदक्षिणां वृणीष्व" इति।

भूयः सः खाण्डिक्यः मन्त्रिभिः सार्द्धं मन्त्रयामास पार्थिवः 'गुरुनिष्क्रय कामोऽयं, किं मया प्रार्थ्यतां' इति। मन्त्रिणः प्रोचुः, तं 'राज्यमशेषं प्रार्थ्यतामयं, शत्रुभिः प्रार्थ्यते राज्यमनायासितसैनिकैः' इति। प्रहस्य तानाह, नृपस्स खाण्डिक्यो महामतिः ,स्वल्पकालं महीपाल्यं मादृशैः प्रार्थ्यते कथम्? एवमेतद्भवन्तोऽत्र अर्थसाधनमन्त्रिणः, परमार्थः कथं कोऽत्र? यूयं नात्र विचक्षणाः' इत्युक्त्वा स तु नृपः समुपेत्यैनं केशिध्वजं उवाच 'किमवश्यं त्वं ददासि गुरुदक्षिणं' इति। तेनोक्तः बाढमित्येव खण्डिक्यः बभाषे — 'भवान् अध्यात्मविज्ञान परमार्थविचक्षणः। यदि दीयते भवता मह्यं गुरुनिष्क्रयः, तत्क्लेशप्रशमायालं यत्कर्म तदुदीरय' इति।

केशिध्वजः तथैव संक्षेपविस्तराभ्यां योगविद्यां प्रकथयामास खाण्डिक्यं प्रति । तदा खाण्डिक्यः 'नरेन्द्र! तद्गच्छ श्रेयसे कृतं सर्वं ममैतद्भवता, यद्विमुक्तिप्रदो योगः प्रोक्तः अव्ययः' इति । ततः यथार्हपूजया तेन खाण्डिक्येन पूजितः सः । आजगाम केशिध्वजः पुरम् । खाण्डिक्योऽपि कृत्वा सुतं राजानं वनं जगाम योगसिद्ध्यै विनिवेशितमानसः गोविन्दे । यमादिगुणसंयुतः भूत्वा तत्रैकान्तमतिः, अवाप लयं विष्णवाख्ये निर्मले ब्रह्मणि । केशिध्वजः स्वकर्म क्षणोन्मुखः विमुक्त्यर्थं चक्रे कर्म चानभिसंहितम् । बुभुजे विषयान् । सकल्याणोपभोगैश्च क्षीणपापोऽमलः अवाप सिद्धिमत्यन्तां तापक्षयफलाम् ।

इत्थं विधिवशात् वा अन्यस्माद्वा कारणात् परस्परशत्रू खाण्डिक्य केशिध्वजौ द्वेषनिन्दासूयाश्च विहाय, विद्यारहस्यानि, योगविद्यां च परस्परमापृच्छ्याभाष्य च निर्मलान्तःकरणौ प्राप्तवन्तौ मुक्तिपदम् ।

अतः खलु —

"द्वेषं निन्दामसूयां च, न कुर्यादुत्तमः क्वचित् ।
विदुषि धनिके केऽपि, ततः गर्भरिपवपि ॥"

अत्रैवादर्श भूतौ केशिध्वजखाण्डिक्यजनकौ ।

इति शम् ।



# सौभरिचरितम्

"संस्कृतकोविदः"
मेडिशेट्टि शिवगणेश्बाबु, पेद्दापुरम्।

सौभरिर्नाम महर्षिः अन्तर्जले द्वादशाब्दं कालमुवास। तत्र चान्तर्जले सम्मदो नाम बहुप्रजः, अतिमात्रप्रमाणः मीनाधिपतिः आसीत्। तस्य पुत्रपौत्रदौहित्राः रेमिरे पृष्ठतोऽग्रतः, पार्श्वयोः, पक्षपुच्छशिरसां चोपरि भ्रमन्तः तेनैव सदा अहर्निशं अतिनिर्वृताः। सोऽपि रेमे अपत्यस्पर्शोपचीयमानप्रहर्षप्रकर्षः, बहुप्रकारं तस्य ऋषेः पश्यतः तैः आत्मजपुत्रपौत्रदौहित्रादिभिः सह चानुदिनं सुतराम्।

अथ अचिन्तयत् अन्तर्जलावस्थितः सौभरिः एकाग्रतः अपहाय समाधिं, अवेक्ष्य चातिरमणीयतां अनुदिनं आत्मजपुत्रपौत्रदौहित्रादिभिः सह मत्स्यस्य तस्य — "अहो! उत्पादयति स्पृहामस्माकं अतीव, धन्योऽयं ईदृशमनभिमतं यः अन्यातरमवाप्यापि रममाणः सह आत्मजपुत्रपौत्रदौहित्रादिभिः एभिः। रंस्यामहे वयमप्येवं ललितं सह पुत्रादिभिः।" इत्येवमभिकांक्षन् सः सन्तानाय निवेष्टुकामः कन्यार्थं अगच्छत् मान्धातारं राजानं जलात् तस्मात् निष्क्रम्य। शतार्धसंख्याः तव सन्ति कन्याः, तासां ममैकां प्रयच्छ नृप" इति पप्रच्छ। तन्निशम्य राजा जराजर्जरितदेहं ऋषिं अवलोक्य प्रत्याख्यानकातरः, तस्माच्च शापभीतः बिभ्यत् किञ्चिद् अधोमुखः दध्यौ चिरम्।

मुनिना पुनः चोदितः राजा मान्धाता सौभरिमुवाच — "भगवन्! अस्मत्कुलस्थितिरियं य एव कन्याभिः, उचितो वरः अभिजनवान् अभिलष्यते तस्मै एव कन्या प्रदीयते। अतिगोचरवर्तिनी अस्मन्मनोरथानां भगवद्याच्ञा। सञ्जाता कथमप्येषा; न विद्मः तदेवमुपस्थिते तत्र भवति, किं कुर्मः" इति। अचिन्तयच्च मुनिः — "अस्मत् प्रत्याख्यानोपायः अयमन्यः। वृद्धोऽयं, अनभिमतः स्त्रीणां, किमुत कन्यकानामित्यमुना सञ्चिन्त्य एतदभिहितं, एवमस्तु, तथा करिष्यामि" इति सञ्चिन्त्य जगाद मान्धातारं — "यद्येवं तदादिश्यतामस्माकं प्रवेशाय, कन्यान्तःपुरवर्षवरः यदि कन्यैव काचिन्मामभिलषति, तदाऽहं करिष्यामि दारसंग्रहं, अन्यथा चेत्तदलमस्माकं एतेनातीतकालारम्भणेन" इति।

ततश्च समाज्ञप्तः मान्धात्रा कन्यान्तःपुरवर्षवरः मुनिशापशङ्कितेन। प्रविशन्नेव तेन सह कन्यान्तःपुरं भगवानकरोत् अखिलसिद्धगन्धर्वेभ्यः अतिशयेन कमनीयं रूपम्। पितुरङ्गीकारवचनेन सर्वा एव कन्यास्ताः सानुरागाः, सप्रमदाः, इभयूथपतिमिव करेणवः वरयाम्बभूवुः अहमहकया ऋषिं तम्। विदितवृत्तान्तः व्याकुलीभूतचित्तः मांधाता राजा अनुमेने कथंकथमपि। कृतानुरूप विवाहः महर्षिः कन्यास्ताः सकला एव स्वमाश्रममनयत्।

तत्र चाशेषशिल्पकल्पप्रणेतारं आहूय विश्वकर्माणं सकलकन्यानामेकैकस्याः, प्रोत्फुल्लपङ्कजाः, कूजत्कलहंसकारण्डवादिविहङ्गमाभिरामजलाशयाः, सोपधानाः, सावकाशाः, साधुशय्यापरिच्छदाः, प्रासादाः क्रियन्तामित्यादिदेश। तदा तथैवानुष्ठितमशेषशिल्पविशेषाचार्यस्त्वष्टा दर्शितवान्। परमर्षिणा ततः आज्ञप्तः, गृहेषु तेषु अनिवार्यानन्दनामा महानिधिरासाञ्चक्रे। ततः अनवरतेन भक्ष्यभोज्यलेह्याद्युपभोगैः, आगतानुगतभृत्यादीन्

अहर्निशं अशेषगृहेषु भोजयामासुः राजकन्याः ताः। सोभरिस्तु परमर्षिः एकैकस्याः मान्धातृकन्यायाः समीपे एकैकः भूत्वा सर्वास्ताः सन्तोषयामास परम्। किन्तु वृद्धमुनिसमधिगत-कन्यकासम्बन्धिदुःखनिवहसम्भरितः मान्धाता पिता तु स्वयं — एतद्विषयं ज्ञात्वा दुहितृभ्यः, सकलसौभाग्यसौख्यसंचयं च दृष्ट्वा, परितोषविस्मयनिर्भरविवशहृदयः अभवत्।

गच्छता कालेन तस्य तासु राजतनयासु पुत्रशतं सार्धमभवत्। अनुदिनानुरूढस्नेहप्रसरश्चाभवत् स तत्रातीव ममताकृष्टहृदयः। अचिन्तयच्च — अप्येते अस्मत्पुत्राः, कलभाषिणः? गच्छेयुः पद्भ्याम्? अप्येते भवेयुः यौवनिनः? अपि पश्येयं कृतदारानेतान्? अप्येषां भवेयुः पुत्राः? अप्येतान् पश्यामि पुत्रान्पुत्रसमन्वितान्?" इत्यादि मनोरथान् अनुदिनं कालसम्पत्तिप्रवृद्धान् उपेक्ष्य एतच्चिन्तयामास —

"अहो मे मोहविस्तारः। मनोरथानां न समाप्तिरस्ति वर्षायुतेनापि तथाब्दलक्षैः। पूर्णेषु पूर्णेषु मनोरथेषु उत्पत्तयः सन्ति पुनर्नवानाम्। पद्भ्यां गता यौवनिनश्च जाता दारैश्च संयोगमिताः प्रसूताः। दृष्टाः सुतास्तत्तनयप्रसूतिं, द्रष्टुं पुनर्वाञ्छति मे अन्तरात्मा। द्रक्ष्यामि तेषामिति चेत्प्रसूतिं मनोरथो मे भविता ततोऽन्यः। पूर्णेऽपि तत्राप्यपरस्य जन्म निवार्यते केन मनोरथस्य। आमृत्यतो नैव मनोरथानामन्तोऽस्ति, विज्ञातमिदं मयाद्य। मनोरथासक्तिजलाश्रयेण तस्यर्द्धिरेषा तपसोऽन्तरायः। मत्स्यस्य सङ्गादभवत् यो मे, सुतादिरागो मुषितोऽस्मि तेन। निस्सङ्गता मुक्तिपदं यतीनाम्। सङ्गादशेषाः प्रभवन्ति दोषाः। आरूढयोगो विनिपात्यतेऽधः, सङ्गेन योगी किमुताल्पसिद्धिः।

समस्तभूतादमलादनन्तात् सर्वेश्वरात् अन्यदनादिमध्यात्, यस्मान्न किञ्चित्तमहं गुरूणां परं गुरुं संश्रयामि विष्णुम् ।

एवं आत्मानं आत्मना अभिधाय असौ सौभरिः अपहाय पुत्रगृहासनपरिच्छदादिकं अशेषं अर्थजातं सकलभार्यासमन्वितः वनं प्रविवेश । तत्राप्यनुदिनं वैखानसनिष्पाद्यम् अशेषक्रियाकलापं निष्पाद्य, क्षपितसकलपापः, परिपक्वमनोवृत्तिः, आत्मन्यग्नीन् समारोप्य भिक्षुरभवत् । भगवत्यासज्याखिलं कर्मकलापं हित्वा अनन्तमजमनादिनिधनमविकारमरणादिधर्ममवाप परमनन्तं परवतामच्युतं पदम् । तस्मात् तृष्णां परित्यजेत् किल ! !



## श्रीवातपुराधीशस्तुतिः

एस्. बि. नरसिंहाचार्यः,
शिरोमणिः, विद्वान्, विशारदः, मदुरै ।

वन्दे वात पुराधीशं वन्दारु शरणं महः ।
नन्दगोपादि सम्मोदं विदधानं रमापतिम् ।। १

मात्स्यं सुरूपं कलयन् जनानां,
खेदं व्यपोह्य श्रुतिमार्गणेन ।
चतुर्मुखादी नवितुं प्रवृत्तं,
तं निस्समं बालकमाश्रयामि ।। २

क्षीरोदधेः मन्थन मादधानात्,
सुरान्विषण्णान् विफलप्रयत्नान् ।
योऽतोषयन्मन्थन संप्रवृत्तं,
धृत्वा गिरिं कूर्मवपुस्स पायात् ॥ ३

किटिं रूपधरं हरिं नमामः,
धरणीं धारयति स्म दंष्ट्रया यः ।
अपहृत्य बलेन दानवेन्द्रा –
दवनीमानयदस्तु नः शरण्यः ॥ ४

कनकाभिध दानवेन्द्र कालः,
स्वपदाश्लिष्ट कयाधु पुत्रलोलः ।
करुणामृत वार्धिरेष दासं,
सुखसेवोचित दर्शनं विदध्यात् ॥ ५

अंगुष्ठमात्र प्रमितः परस्सः,
यो वा मनोऽधात् बलिनञ्च नम्रम् ।
किमद्भुतं वायुपुरेश ते स्यात्,
मदीय पीडा प्रशमे लघिष्ठे ॥ ६

भो वायुपत्तनपते नमतां शरण्य,
त्रैविक्रमांघ्रि नखनिस्सृत गाङ्गतीर्थम् ।
वेधा निपीय परिपूततमो बभूव,
त न्नो गदा नपनुदाऽनुगृहाण दृष्ट्या ॥ ७

अक्षत्रमेतद् भुवनं वितन्वन्,
पितुर्वधात् रुष्टमना अभूस्त्वम् ।

तं दर्शय क्रोधमिहास्य रोगे,
सिसेविषोस्त्वां ततं स्वदृष्टचा ॥ ८

पितुस्सदुक्तीः परिपालयन्तं,
शिष्ट प्रजापालन दीक्षितं त्वाम् ।
रामेति कृष्णेति च रावणारे !
त्वां संस्तुमो रोगनिवृत्तिकामाः । ९

बाल्ये युवत्वे च मनोजहार्यं,
लीला वितन्वन्विषमाः विचित्राः ।
गोपी दुकूले स्सह कृष्ण मायासहाय,
नः पाहि कृपांऽबुराशे ॥ १०

हेलाहलिन् वात पुराधिनाथ,
क्षमाऽऽकरा सज्जन निग्रहेश ।
अस्माक माधीनपनोदयंस्त्वं,
दद्याः परं दर्शन माशु कृष्ण ॥ ११

कल्कीभविष्य न्नसुरान्हनिष्यस्य,
शेष लोकप्रभवादि हेतो ।
अस्मच्छरीर स्थितरोगजातं,
विनाश्य सद्दर्शनदायकः स्याः ॥ १२

इति माडभूषि नरसिंह वागियं,
गुरुवायुपत्तन पतिप्रहर्षणे ।
उदिता समस्तगद दुःखनाशिनी,
तनुतादुपर्युपरि मङ्गळानि नः ॥ १३

# श्रीमध्वाचार्यः

— "अवर"

वासुदेवस्य जातस्य द्वादश मासाः नैव पूर्णाः, अत्रान्तरे पद्भ्यां गन्तु मारेभे। एकदा पशुपालकः पशून् चारणार्थं मोक्तुं नाया तश्चेत् तमानेतुं भट्टः प्रस्थितः। यावत् स पुनरायाति, तावत् गृहे पशवो नाऽसन्। "पशवः कुतो गताः? इति स वेदवतीं पप्रच्छ। साऽपि बालः क्व गतः" इति प्रतिप्रश्नं अकरोत्। एव मुभौ प्रश्नप्रतिप्रश्नाभ्यां शिशोः पशूनां च गृहेऽभावं प्रतीय तदन्वेषणो प्रवृत्तौ। सूर्यास्तमयसमये पशवः तत्पश्चात् गोपशिशुकश्च गृहमागताः। मध्यगेहभट्टः परमानन्देन "वासुदेव! वासुदेव इव त्वमपि गोपालबालकः संवृत्तोऽसि" इति वदन् त मुत्थाप्य सगाढालिङ्गनं चुचुम्ब।

तृतीये वर्षे कदाचित् एतादृशी विचित्रा घटना काचिद् घटिता। एकदा भट्टः वृषभव्यापारार्थं समागतेन व्यापारिणा सह व्यवहरन् भोजनाय विलम्बमकरोत्। बालो वासुदेव स्समागत्य "तात! माता भवन्तं भोजनार्थं आह्वयति" इति पितर मवोचत्। सोऽपि "व्यापारिणे धनं दत्वा आगमिष्यामि" इत्युक्तवान्। "अहं दास्यामि भवान् गच्छतु" इति वदन्नेव बालो वासुदेवः तिन्त्रिणीबीजानि हस्ताभ्यां गृहीत्वा व्यापारिणः पुरस्तात् प्रक्षिप्तवान्। तानि स्वर्णशकलान्यराजन्त।

चतुर्थे वर्षे वेदवत्याः मातृकुले प्रवृत्तं विवाहं पुरस्कृत्य भट्टपरिवारः "नडयूरु"ग्रामं गतः। तत्र विवाहसंभ्रमे बालोऽ-

दृश्यतां गतः। अन्वेषणे कृते, पान्थः कश्चित् "अनेन मार्गेण बालः कश्चित् गच्छन्नास्त" इत्यवदत्। भट्टः कतिपयै रनुचरैः तेन मार्गेण क्रोशद्वयदूरे विद्यमानं "कोडयूरु"ग्रामं गत्वा तत्रत्ये नारायणस्वामिनः आलये बालः कश्चिदस्तीति श्रुत्वा आलयार्चक मुपेत्याऽपृच्छत्। "इदानीमेव बालकः इतः प्रस्थितः" इति अर्चकोऽब्रवीत्। एवं बालं मार्गमाणो भट्टः "उडिपि" मार्गेण अनन्तेश्वरस्वामिसन्निधिं प्राप्तः। तत्र आलये ध्याननिमग्नं वासुदेवं दृष्ट्वा भट्टः "वत्स! कथं एकाकी त्वमेतावद्दूर मायातोऽसि?" इत्यपृच्छत्। बालः प्राह — "नाऽह मेकाकी समागतोऽत्र; नारायणभट्टो नाम कश्चिन्महान् मामत्र आनीतवान्" इति। मध्यगेहभट्टः तच्छ्रुत्वा "कोडयूरु नारायणस्वामी ननु स्वयं तव सहायक आसी"दिति वदन् तस्मै स्वामिने कृतज्ञतापूर्वकं प्रणनाम।

बालस्य पञ्चमे वर्षे भट्टः विद्याभ्यासाय अक्षराभ्यास मकरोत्। कस्मिंश्चिद्दिने अक्षराणि विलिख्य वारंवारं लेखनाभ्यासं कुरु इति आदिश्य पुत्रं, पिता क्वचिद्गतः। प्रतिनिवृत्तः लिखिताक्षराणि यथापूर्वाणि–वारंवारं लेखनाभावात् अपीवराणि-यथावस्थितकृशानि विलोक्य "किमरे! लेखनाभ्यासः कुतो न कृतः?" इति पुत्रं पप्रच्छ। पुत्रः प्राह – पुनःपुनर्लेखनं किमर्थं? दृष्टानि किल लिखितानि" इति। "दर्शनमात्रेण कथं तानि आयातानी"ति पिताऽपृच्छत्। "आयातानि वा न वा पश्यन्तु" इति वदन्नेव बालः लिखितान्यक्षराणि सर्वाण्यपि निश्शङ्कं सक्रमं च, पृथक् पृथक् विलिख्य प्रदर्शयामास। पिता आश्चर्यान्वितस्सन् पुन रवशिष्टान्यप्यक्षराणि लिलेख। बालोऽपि तानि यथा दृष्टानि तथा विलिख्य दर्शयामास।

भट्टः अष्टादशपुराणेषु निष्णातः। पितुः पुराणपठनेन तदर्थप्रवचनेन च कथोपकथाः शृण्वन् बालः बहुश्रुत एवाऽभवत्। स कदाचित् नेय्यंपल्लि नामकं ग्रामं मात्रा साकं गतः। तत्र शिवभट्टोनाम पण्डितः भागवतं पठन् "प्रह्लाद इव गजेन्द्रोऽपि महान् भक्त" इत्यकथयत्। वासुदेवः तच्छ्रुत्वाऽह — "आर्य! प्रह्लादस्य गजेन्द्रस्य च भक्तिविषये तारतम्य मस्ति। प्रह्लादः भगवतः सर्वत्र व्याप्तिं निश्शङ्कं जानाति। गजेन्द्रस्तु अस्ति अस्तीत्युच्यमानो देवः अस्ति वा न वा इति विचिकित्सामप्यभजत्। (तेलुगु भागवते – "कलडन्दुरु दीनुलयेड" इति पद्यतात्पर्यं) अतः प्रह्लाद भक्ति राजानसिद्धा अनन्तभक्तिः परभक्तिः परमभक्तिर्वा भवितुमर्हति। गजेन्द्रभक्तिस्तु आर्तभक्तिः आपद्विमोचनार्थं प्रवृत्ता इत्यस्ति तारतम्य मिति।

भट्टः कदाचित्पुराणपठनं कुर्वन्नास्त, तदा सन्दर्भवशात् "लिकुच" शब्दः प्रसक्तः। बालो वासुदेवः तस्य शब्दस्य कोऽर्थः इति पप्रच्छ। पिता तत्पर्यायशब्देन तदर्थं अवोचत्। परन्तु बालः तेन न तृप्तः। सोऽर्थः कथं तस्य शब्दस्य इति पुनः पप्रच्छ। बहुवारं तस्य शब्दस्य प्रसक्तावपि भट्टः तद्व्युत्पत्तिं न परामृशत्। पञ्चवर्षीय एव वयसि अस्य बालस्य तादृशः शब्दार्थविचारः चिकीर्षाविषय आसीत्किलेति साश्चर्यः पिता श्रुतिस्मृतिपुराणेतिहासाः त्वद्वशे प्रकाशेरन्निति आशीर्वादेन तमभिननन्द।

एकदा पाजकग्रामवासिनां मध्ये भट्टः भगवद्गीतां पठन्नर्थं बोधयन्नास्त। बालवासुदेवः लगुडं करे धृत्वा तत्र स्थितः। श्रोतॄणां मध्ये कश्चित् बालं "गोपाल इव स्थितोऽसि दण्डपाणिस्सन्, किं पशुपालनं करिष्यसि" इत्यपृच्छत्। बालः — "गोपाल-

कृष्ण इव गीतां प्रबोध्य मतमुद्धरिष्यामि" इत्याह। भट्टः तच्छ्रुत्वा "वत्स! त्वत्करस्थ दण्ड इव वेदमतमपि निष्पत्रपुष्पं भग्नशाखं च भूत्वा स्थाणुतां गतम्। शुष्ककाष्ठतां गतं स्थाणुं किसलयितुं किं त्वं प्रभवसि? इति प्रत्याह। अथ तस्मिन्नेव क्षणे वासुदेवः करस्थं दण्डं भूमौ खनित्वा रूढमूलं कृत्वा परितः आलवालं विधाय जलमानीय असिञ्चत्। यावज्जलसेचनं पूर्णं नासीत्तावदेव तच्छुष्कमपि काष्ठं किसलयितं सत् हरितपत्रैः संशोभित मासीत् इति ह वदन्ति।

कस्मिंश्चिदन्यस्मिन् दिने भट्टः भागवते गजेन्द्रमोक्षकथां कथयन्नास्त। गजेन्द्ररक्षणार्थं आतुरो भगवान् हरिः सत्वरं ससम्भ्रमं च यदाऽधावत् तदा लक्ष्मी देवी पत्युः पश्चादनुधावन्ती विविधं चिन्तयामास। (तेलुगु भागवत भावानुरोधेन) "गम्यस्थान मिद मित्यनिर्दिश्य धावति किल नाथः! का वा अपरा द्रौपदी "गोविन्दे" त्याक्रोशत्? वेदापहारं पुनः कोन्वसुरश्चकार, येन ब्रह्मणः प्रार्थनया हरि र्धावेत्! अथवा पातालं गतः बलिर्वैरोचनिः पुन स्त्रैलोक्यराज्यं अपहर्तुं देवेन्द्रेण किं युध्यति? उत नृसिंहावतारकाल इव निजभृत्यभाषितं सम्भावयितुं कस्मिंश्चित्प्रदेश विशेषे सान्निध्यं प्रदर्शयितुं अवसरः प्राप्तो वा? नो चेत् हरिः एवं ससम्भ्रमं धावेत् कुतः?" इति चिन्तयन्ती लक्ष्मीः सपरिवारं हरि मन्वगच्छत्। इत्येवं रीत्या कथाप्रसंगः प्रवृत्तः। बालो वासुदेवः सर्वं सावधान अशृणोत्।

[अनुवर्तते]

# 1898 नळ फाल्गुनमास (1977 March) परीक्षाणां कालसूची

| परीक्षाः | 5–3–77 | | 6–3–77 | | 7–3–77 | |
|---|---|---|---|---|---|---|
| | प्रातः 10 A. M. | सायम् 2 P. M. | प्रातः 10 A. M. | सायम् 2 P. M. | प्रातः 10 A.M | |
| परिचयः | — | — | परिचयः | — | — | |
| अभिज्ञः | — | — | प्रथमपत्रम् | द्वितीयपत्रम् | — | |
| विचक्षणः | — | प्रथमपत्रम् | द्वितीयपत्रम् | तृतीयपत्रम् | — | |
| समर्थः | प्रथमखण्डे प्रथमपत्रम् | प्रथमखण्डे द्वितीयपत्रम् | द्वितीयखण्डे प्रथमपत्रम् | द्वितीयखण्डे द्वितीयपत्रम् | — | |
| कोविदः | प्रथमखण्डः | द्वितीयखण्डः | तृतीयखण्डः | चतुर्थखण्डः | पञ्चमखण्डः | |

कार्यस्थानम् – चित्तूरु,
26–1–77.

परीक्षामन्त्री,
संस्कृतभाषाप्रचारिणीसभा.

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No. 1.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००



## प्रहेलिका



प्रातः प्रातः समुत्थाय द्वौ मुनी च कमण्डलू ।
अत्र क्रियापदं वक्तु मवधि ब्रह्मणो वयः ॥

कुञ्जी – प्रातः इति क्रिया । प्रा = पूरणे लट् - प्रथमपुरुष द्विवचनम् । प्रातः = पूरयतः, इत्यर्थः ।

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary, S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge) at Vijaya Press, Chittoor. (A. P.) C. 1500.